सिन्धावधि निवसतः भावयव्यस्य राज्ञः ।
प्रशंसाम् इच्छमानः ।
अमन्दान् स्तोमान् प्र भरे मनीषा सिन्धावधि क्षियतः भाव्यस्य ।
यः मे सहस्रं निरमिमीत सवान् अतूर्तः राजातूर्णः इति वा ।
प्रभरे मनीषया मनसः ईषया स्तुत्या प्रज्ञया वा ।
बलः वा प्रतिषेधव्यवहितः ।
अम्बा अस्मै अलं भवति इति वा ।
बालः बलवर्ती भर्तव्यः भवति ।
अमन्दान् स्तोमान् अबालिशान् अनल्पान् वा ।
यः मे सहस्रम् अमिमीत सवान् अतूर्तः राजा श्रवः इच्छमानः ।
अम्बा अस्मै बलं भवति इति वा ।
अत्वरमाणः इति वा । । ९.१० ।

तेषां रथः प्रथमागामी भवति ।
तस्य एषा भवति ।
रपतेः वा [ रसतेः वा ] ।
रममाणः अस्मिन् तिष्ठति इति वा ।
रथः रंहतेः गतिकर्मणः ।
राजसंयोगात् युद्धोपकरणानि ।
यज्ञसंयोगात् राजा स्तुतिं लभेत ।
स्थिरतेः वा स्यात् विपरीतस्य । । ९.११ ।

आस्थाता ते जयतु जेतव्यानि ।
दुन्दुभ्यतेः वा स्यात् शब्दकर्मणः ।
तस्य एषा भवति ।
द्रुमः भिन्नः इति वा ।
दुन्दुभिः इति शब्दानुकरणम् ।
गोभिः सन्नद्धः असि ।
अस्मत्सखा प्रतरणः सुवीरः कल्याणवीरः ।
वनस्पते दृळहाङ्गः हि भव ।
वीळअयस्व इति संस्तम्भस्व ।
गोभिः सन्नद्धः असि वीळअयस्व आस्थाता ते जयतु जेत्वानि ।
वनस्पते वीड्वङ्गः हि भूयाः अस्मत्सखा प्रतरणः सुवीरः । । ९.१२ ।

बहुधा ते घोषं मन्यताम् ।
उप श्वासय पृथिवीम् उत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
तस्य एषा भवति ।
इषुधिः इषूणां निधानम् ।
दूरात् दूरतरम् अपसेध शत्रून् ।
विष्ठितं स्थावरं जङ्गमं च यत् ।
उप श्वासय पृथिवीं च दिवं च ।
सः दुन्दुभे सजूः इन्द्रेण देवैः दूरात् दवीयः अप सेध शत्रून् ।
सः दुन्दुभे सहजोषणः इन्द्रेण च देवैः च । । ९.१३ ।

संपूर्वात् वा किरतेः ।

प्रस्मयते इव अपाव्रियमाणः ।
तस्य एषा भवति ।
हस्तघ्नः हस्ते हन्यते ।
पृष्ठे निनद्धः जयति प्रसूतः इति व्याख्यातम् ।
शब्दानुकरणं वा ।
बह्वीनां पिता बहुः अस्य पुत्रः चिश्चा कृणोति सम् अनावगत्य ।
बह्वीनां पिता बहुः अस्य पुत्रः इति इषून् अभिप्रेत्य ।
इषुधिः सङ्काः पृतनाः च सर्वाः पृष्ठे निनद्धः जयति प्रसूतः ।
सङ्काः सचतेः । । ९.१४ ।

ज्याया बधात् परित्रायमाणः ।
अभीशवः व्याख्याताः ।
पुंसतेः वा ।
हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् ।
अहिः इव भोगैः परिवेष्टयति बाहुम् ।
हस्तघ्नः विश्वा वयुनानि विद्वान् पुमान् पुमांसं परि पातु विश्वतः ।
अहिः इव भोगैः परि एति बाहुं ज्याया हेतिं परिबाधमानः ।
तेषाम् एषा भवति ।
पुमान् पुरुमनाः भवति । । ९.१५ ।

मनः पश्चात् सन्तः अनुयच्छन्ति रश्मयः ।
तस्य एषा भवति ।
धन्वन्ति अस्मात् इषवः ।
वधकर्मणः वा ।
धनुः धन्वतेः गतिकर्मणः ।
सुषारथिः कल्याणसारथिः ।
रथे तिष्ठन् नयति वाजिनः पुरस्तात् सतः यत्र यत्र कामयते ।
अभीशूनां महिमानं पनायते मनः पश्चात् अनु यच्छन्ति रश्मयः ।
रथे तिष्ठन् नयति वाजिनः पुरः यत्र यत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पूजयामि । । ९.१६ ।

समदः समदः वात्तेः ।
प्रजावयति इषून् इति वा ।
जिनातेः वा ।
सम्मदः वा मदतेः ।
तस्याः एषा भवति ।
इति सा निगदव्याख्याता ।
धनुः शत्रोः अपकामं कृणोति धन्वना सर्वाः प्रदिशः जयेम ।
धन्वना गाः धन्वना आजिं जयेम धन्वना तीव्राः समदः जयेम ।
जया जयतेः वा । । ९.१७ ।

वितत अधि धनुषि ज्या इयं समने संग्रामे पारयन्ती [ पारं नयन्ती ] ।
[ वधकर्मणः वा ।
] तस्य एषा भवति ।
इषुः ईषतेः गतिकर्मणः ।
योषा इव [ शिङ्क्ते ] शब्दं करोति ।

वक्ष्यन्ति इव आगच्छति कर्णं प्रियम् इव सखायम् इषुं परिष्वजमाना ।
वक्ष्यन्ति इव इदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषा इव शिङ्क्ते वितत अधि धन्वन् ज्या इयं समने पारयन्ती । । ९.१८ ।

अश्वाजनीं कशा इति आहुः ।
अश्वकशायाः एषा भवति ।
क्रोशतेः वा ।
खशया ।
वाक् पुनः प्रकाशयति अर्थान् ।
कृष्यतेः वाणूभावात् ।
कशा प्रकाशयति भयम् अश्वाय ।
गोभिः सन्नद्धा पतति प्रसूता इति व्याख्यातम् ।
मृगयतेः वा ।
मृगमयः अस्याः दन्तः ।
सुपर्णं वस्ते इति वाजान् अभिप्रेत्य ।
यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्र अस्मभ्यम् इषवः शर्म यच्छन्तु शरणं संग्रामेषु ।
सुपर्णं वस्ते मृगः अस्याः दन्तः गोभिः सन्नद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति तत्र अस्मभ्यम् इषवः शर्म यंसन् । । ९.१९ ।

तस्य एषा भवति ।
ऊर्ध्वखं वा ।
ऊर्क्करं वा ।
उरु मे कुरु ।
इति अब्रवीत् ।
तत् उलूखलम् अभवत् ।
इति च ब्राह्मणम् ।
जघनं जङ्घन्यतेः ।
उरुकरं वा एतत् उलूखलम् इति आचक्षते परोक्षेण ।
अश्वाजनि [ प्रचेतसः ] प्रवृद्धचेतसः अश्वान् समत्सु समरणेषु संग्रामेषु चोदय ।
जघनानि च उपघ्नति ।
आसक्तः अस्मिन् कायः ।
स्क्थि सचतेः ।
आघ्नन्ति सानूनि एषां सरणानि सक्थीनि ।
अश्वाजनि प्रचेतसः अश्वान् समत्सु चोदय ।
आ जङ्घन्ति सान्वेषां जघनान् उप जिघ्नते ।
उलूखलम् उरुकरं वा । । ९.२० ।

इति सा निगदव्याख्याता ।
यत् चित् हि त्वं गृहे गृहे उलूखलकः युज्यसे ।
इह द्युमत्तमं वद जयताम् इव दुन्दुभिः । । ९.२१ ।

तस्य एषा भवति ।
तत् वर्षकर्मा वर्षणात् वृषभः ।
अतिबृहति रेतः इति वा ।
वृषभः प्रजां वर्षति इति वा । । ९.२२ ।

द्रुघणः द्रुममयः घनः ।
तदभिवादिनी एषा क् भवति ।
तत्र इतिहासम् आचक्षते ।
प्रकीर्णानि अस्मिन् धनानि भवन्ति ।
प्रधनः इति सङ्ग्रामनाम ।
तत् वा सूभर्वं सहस्रं गवां मुद्गलः प्रधने जिगाय ।
तेन [ तम् ] सूभर्वं राजानम् ।
[ आजेः ] आजयनस्य आजवनस्य इति वा ।
अमेहयन् वृषभं मध्ये ।
न्यक्रन्दयन् उपयन्ते इति व्याख्यातम् ।
तेन सूभर्वं शतवत् सहस्रं गवां मुद्गलः प्रधने जिगाय ।
न्यक्रन्दयन् उपयन्ते एनम् अमेहयन् वृषभं मध्ये आजेः ।
भर्वतिः अत्तिकर्मा ।
मुद्गलः भार्म्यश्वः ऋषिः वृषभं च द्रुघणं च युक्त्वा सङ्ग्रामे व्यवहृत्य आजिं जिगाय ।। ९.२३ ।

येन जिगाय शतवत् सहस्रं गवां मुद्गलः पृतनाज्येषु ।
भार्म्यश्वः भृम्यश्वस्य पुत्रः ।
भृम्यश्वः भृमयः अस्य अश्वाः ।
अश्वभरणात् वा ।
पितुः इति अन्ननाम ।
पातेः वा ।
पिबतेः वा ।
तस्य एषा भवति ।
मुदंगिलः वा ।
प्यायतेः वा ।
मदंगिलः वा ।
मदनं गिलति इति वा ।
मुद्गगिलः [ वा ] ।
मुद्गलः मुद्गवान् ।
जयनात् वा ।
पृतनानामजनात् वा ।
पृतनाज्यम् इति सङ्ग्रामनाम ।
इमं तं पश्य वृषभस्य युञ्जं काष्ठायाः मध्ये द्रुघणं शयानम् ।
इमं तं पश्य वृषभस्य सहयुजं काष्ठायाः मध्ये द्रुघणं शयानम् ।
येन जिगाय शतवत् सहस्रं गवां मुद्गलः पृतनाज्येषु ।। ९.२४ ।

तासाम् एषा भवति ।
नद्यः व्याख्याताः ।
यस्य त्रितः ओजसा बलेन त्रितः त्रिस्थानः इन्द्रः वृत्रं विपर्वाणं व्यर्दयति ।
तवतेः [ वा ] वृद्धिकर्मणः ।
तं पितुं स्तौमि महतः धारयितारं बलस्य ।
यस्य त्रितः व्योजसा वृत्रं विपर्वम् अर्दयत् ।
पितुं नु स्तोषं महः धर्माणं तविषीम् ।
तविषी इति बलनाम ।। ९.२५ ।

तस्मात् विपाट् उच्यते ।

तत्प्रतिषेधः असितम् ।
मरुद्वृधाः सर्वाः नद्यः मरुतः एना वर्धयन्ति ।
वितस्ता विदग्धा विवृद्धा महाकूला ।
आर्जीकीयां विपाट् इति आहुः ।
ऋजीकप्रभवा वा ।
ऋजुगामिनी वा ।
विपाट् विपाटनात् वा ।
विपाशनात् वा ।
तासाम् एषा भवति ।
पाशाः अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः ।
पूर्वम् आसीत् उरुञ्जिरा ।
सुषोमा सिन्धुः ।
यत् एनाम् अभिप्रसुवन्ति नद्यः ।
सिन्धुः स्यन्दनात् ।
सितम् इति वर्णनाम ।
आपः आप्नोतेः ।
विप्रापणात् वा ।
इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोमम् आसेवध्वम् ।
असिक्नयशुक्लासिता ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुहि आ सुषोमया ।
असिक्न्या च सह मरुद्वृधे वितस्तया च अर्जीकीयः आशृणुहि सुषोमया च इति समस्तार्थः ।
अथ एकपदनिरुक्तम् ।
गङ्गा गमनात् ।
यमुना प्रयुवती गच्छति इति वा ।
प्रवियुतं गच्छति इति वा ।
सरस्वती ।
सर्तेः ।
तद्वती ।
शुतुद्री शुद्राविणी ।
क्षिप्रद्राविणी ।
आशु तुन्ना इव द्रवति इति वा ।
पर्ववती [ भास्वती ] कुटिलगामिनी ।
इरावतीं परुष्णी इति आहुः ।
सरः इति उदकनाम ।
इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या । । ९.२६ ।

महे रणाय चक्षसे ।
आपः हि ष्ठा मयोभुवः ताः नः ऊर्जे दधातन ।
तासाम् एषा भवति ।
दोषं धयन्ति इति वा ।
ओषति एना धयन्ति इति वा ।
ओषधयः ओषद्धयन्ति इति वा ।
आपः हि स्थ सुखभुवः ताः नः अन्नाय धत्त ।
महते च नः रणाय रम्णीयाय [ च ] दर्शनाय । । ९.२७ ।

तस्याः एषा भवति ।
रात्रिः व्याख्याता ।
स्थानानि ।
जन्मानि अत्र अभिप्रेतानि ।
जन्मानि इति ।
नामानि ।
शतं धामानि सप्त च [ इति ] ।
हरणानां भरणानाम् इति वा ।
याः ओषधयः पूर्वाः जाताः देवेभ्यः त्रीणि युगानि पुरा मन्ये नु तत् बभ्रूणाम् अहं बभ्रुवर्णानां
मनै नु बभ्रूणाम् अहं शतं धामानि सप्त च ।
याः ओषधीः पूर्वाः जाताः देवेभ्यः त्रियुगं पुरा ।
धामानि त्रयाणि भवन्ति ।
सप्तशतं पुरुषस्य मर्मणां तेषु एना दधति इति वा । । ९.२८ ।

आपूपुरः त्वं रात्रि पार्थिवं रजः ।
तस्याः एषा भवति ।
ग्रामात् अरमणं भवति इति वा ।
अरण्यम् अपार्णम् ।
अरण्यानि अरण्यस्य पत्नी ।
बृहती महती वितिष्ठसे आवर्तते त्वेषं तमः रजः ।
स्थानैः मध्यम् अस्य ।
दिवः सदांसि बृहती वि तिष्ठसे आ त्वेषं वर्तते तमः ।
आ रात्रि पार्थिवं रजः पितुः अप्रायि धामभिः ।
दिवः सदांसि । । ९.२९।

कथा ग्रामं न पृच्छसि न त्वा भीः इव विन्दतीम् ।
श्रद्धा श्रद्धानात् ।
तस्याः एषा भवति ।
इवः परिभयार्थे वा ।
अरण्यानि इति एनाम् आमन्त्रयते ।
अरण्यानि अरण्यानि असौ या प्र इव नश्यसि ।
या असौ अरण्यानि वनानि पराची इव नश्यसि कथं ग्रामं न पृच्छसि ।
न त्वा भीः विन्दति इव इति । । ९.३० ।

श्रद्धां भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेन आवेदयामः ।
पृथिवी व्याख्याता ।
श्रद्धया हविः साधु हूयते ।
श्रद्धया अग्निः साधु सम् इध्यते ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ।
श्रद्धया अग्निः सम् इध्यते श्रद्धया हूयते हविः ।
तस्याः एषा भवति । । ९.३१ ।

सुखा नः पृथिवि भव ।
तस्याः एषा भवति ।
अप्वा व्याख्याता ।
[ यच्छन्तु ] शरणं सर्वतः पृथु ।

यच्छ नः शर्म ।
कण्टतेः वा स्यात् गतिकर्मणः ।
उद्गततमः भवति ।
कण्टकः कन्तपः वा ।
अनृक्षरा निवेशनी ।
ऋक्षरः कण्टकः ऋच्छतेः ।
यच्छा नः शर्म सप्रथः ।
स्योना पृथिवि भवान् ऋक्षरा निवेशनी ।
कृन्ततेः वा । । ९.३२ ।

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गनि अप्वे परेहि ।
अभि प्रेहि निः दह हृत्सु शोकैः अन्धेन अमित्राः तमसा सचन्ताम् ।
अमीषां चित्तानि [ प्रज्ञानानि ] प्रतिलोभयमाना गृहाणाङ्गानि अप्वे परेहि ।
अभिप्रेहि ।
निः दह एषां हृदयानि शोकैः ।
अन्धेन अमित्राः तमसा संसेव्यन्ताम् ।
अग्नायी अग्नेः पत्नी ।
तस्याः एषा भवति । । ९.३३ ।

इह इन्द्राणीम् उप ह्वये वरुणानीं स्वस्तये ।
अग्नायीं सोमपीतये ।
इति सा निगदव्याख्याता । । ९.३४ ।

अथ अतः अष्टौ द्वन्द्वानि ।
[ उलूखलमुसले ।
] उलूखलं व्याख्यातम् ।
मुसलं मुहुः सरम् ।
तयोः एषा भवति । । ९.३५ ।

आयजी वाजसातमा ता हि उच्चा विजर्भृतः ।
हरी इव अन्धांसि वअप्सता ।
आयष्टव्ये अन्नानां संभक्ततमे ते हि उच्चैः विह्रियेते हरी इव अन्नानि भुञ्जाने ।
हविर्धाने हविषां निधाने ।
तयोः एषाभवति । । ९.३६ ।

द्यावापृथिव्यौ व्याख्याते ।
आ वाम् उपस्थम् अद्रुहाः देवाः सीदन्तु यज्ञियाः ।
तयोः एषा भवति ।
इह अद्य सोमपीतये ।
आसीदन्तु वाम् उपस्थम् उपस्थानम् [ अद्रोग्धव्ये इति वा ] यज्ञियाः देवाः यज्ञसंपादिनः इह अद्य सोमपानाय । । ९.३७ ।

द्यावा नः पृथिवी इमं सिध्रम् अद्य दिविस्पृशम् ।
यज्ञं देवेषु यच्छताम् ।
द्यावापृथिव्यौ नः इमं साधनम् अद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम् ।
विपाट्छुतुद्र्यौ व्याख्याते ।
तयोः एषा भवति । । ९.३८ ।

विषण्णे इति वा ।
तयोः एषा भवति ।
अरिषण्यौ वा ।
अरण्यौ वा ।
आर्त्नी अर्तन्यौ वा ।
विपाट्छुतुद्री पयसा प्रजवेते ।
गावौ इव [ शुभ्रे ] शोभने मातरौ संरिहाणे ।
हर्षमाणे वा ।
हासमाने ।
अश्वे इव विमुक्ते इति वा ।
उशत्यौ कामयमाने ।
पर्वतानाम् उपस्थात् उपस्थानात् ।
गावा इव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ।
प्र पर्वतानाम् उशती उपस्थात् अश्वे इव विपिते हासमाने ।
हासतिः स्पर्धायाम् । । ९.३९ ।

शुनासीरौ ।
शु एति अन्तरिक्षे ।
सीरः आदित्यः सरणात् ।
शुनः वायुः ।
ते आचरन्त्यौ समनसौ इव योषे माता इव पुत्रं बिभृताम् उपस्थे उपस्थाने ।
ते आचरन्ती समना इव योषा माता इव पुत्रं बिभृताम् उपस्थै ।
अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ।
तयोः एषा भवति ।
अपविध्यतां शत्रून् संविदाने आर्त्न्यौ इमे विघ्नत्यौ अमित्रान् । । ९.४० ।

अहोरात्रे इति वा ।
सस्यं च समा च इति कात्थक्यः ।
देवी जोष्ट्री देव्यौ जोषयित्र्यौ द्यावापृथिव्यौ इति वा ।
इति सा निगदव्याख्याता ।
तेन इमाम् उप सिञ्चतम् ।
शुनासीरौ इमां वाचं जुषेथां यत् दिवि चक्रथुः पयः ।
तयोः एषः संप्रैषः भवति । । ९.४१ ।

[ वसुधीती ] वसुधान्यौ ।
यज इति संप्रैषः ।
तयोः एषः संप्रैषः भवति ।
सस्यं च समा च इति कात्थक्यः ।
अहोरात्रः इति वा ।
द्यावापृथिव्यौ इति वा ।
देव्याः ऊर्जाह्वान्यौ ।
देवी ऊर्जाहुती ।
वीतां पबेतां कामयेतां वा ।
वसुधानाय च ।
ययोः अन्याघानि द्वेषांसि अवयावयत्यावहत्यन्या वसूनि वनन्नीयानि यजमानाय ।
देव्यौ जोषयित्र्यौ ।

देवी जोष्ट्री ।
वसुवने वसुधेयस्य वीतां यज ।
देवी जोष्ट्री वसुधीती ययोः अन्याघा द्वेषांसि यूयवदानि आवक्षत् वसु वार्याणि यजमानाय
वसुवननाय च । । ९.४२ ।

पुराणेन नवम् ।
देवी ऊर्जाहुती ।
वीतां पिबेतां कामयेतां वा ।
वसुधानाय च ।
वसुवननाय च ।
यज इति संप्रैषः यज इति संप्रैषः ।
ताम् ऊर्जम् ऊर्जाहुती ऊर्जयमाने अधाताम् ।
सहजग्धिं च सहपीतिं च अन्या ।
देव्याः ऊर्गाह्वान्यौ ।
पुराणेन नवं ताम् ऊर्जम् ऊर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ।
देवी ऊर्जाहुती इषम् ऊर्जम् अन्या वक्षत् सग्धिं सपीतिम् अन्या नवेन पूर्वं दयमनाः स्याम
अन्नं च रसं च आवहति [ आवहति ] अन्या ।
नवेन पूर्वं दयमानाः स्याम । । ९.४३ ।

तासां वायुः प्रथमागामी भवति ।
अनर्थकः वकारः ।
एतेः इति स्थौलाष्ठीविः ।
वायुः वातेः ।
तस्य एषा भवति ।
अथ अतः मध्यस्थानाः देवताः ।
वेतेः वा स्यात् गतिकर्मणः । । १०.१ ।

तेषां पिब शृणु नः ह्वानम् इति ।
कम् अन्यं मध्यमादेवम् अवक्ष्यत् ।
तस्य एषा अपरा भवति ।
वायो आयाहि दर्शनीयेमे सोमाः अरङ्कृताः [ अलङ्कृताः ] ।
वायो आ याहि दर्शत इमे सोमाः अरङ्कृताः ।
तेषां पाहि श्रुधी हवम् । । १०.२ ।

श्रवः इति अन्ननम ।
आसस्राणासः शवसानम् अच्छा इन्द्रं सुचक्रे रथ्यासः अश्वाः ।
वरुणः वृणोति इति सतः ।
तस्य एषा भवति ।
उभयप्रधाना इति अपरम् ।
इन्द्रप्रधाना इति एके नैघण्टुकं वायुकर्म ।
वायोः च अस्य भक्षः यथा न विदस्येत् इति ।
श्रूयते इति सतः ।
ऋज्यन्तः ऋजुगामिनः अन्नम् अभिवहेयुः ।
रथ्याः अश्वाः रथस्य वोढारः ।
कल्याणचक्रे रथे योगाय ।
अभिबलायमानम् इन्द्रम् ।
अभि श्रवः ऋज्यन्तः वेहयुः नू चित् नु वायोः अमृतं वि दस्येत् ।
आससृवांसः ।
नवं च पुराणं च । । १०.३ ।

उदकम् अपि कबन्धम् उच्यते ।
तस्य एषा अपरा भवति ।
तेन सर्वस्य भुवनस्य राजा यवम् इव वृष्टिः व्युनत्ति भूमिम् ।
द्यावापृथिव्यौ च अन्तरिक्षं च महत्त्वेन ।
बन्धिः अनिभृतत्वे ।
नीचीनबारं वरुणः कबन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
कवनम् उदकं भवति ।
कबन्धं मेघम् ।
नीचीनद्वारं वरुणः ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिः व्युनत्ति भूम ।
तत् अस्मिन् धीयते ।
कम् अनिभृतं च प्रसृजति । । १०.४ ।

रोरूयमाणः द्रवति इति वा ।
रोदयतेः वा ।

यत् अरुदत् तत् रुद्रस्य रुद्रत्वम् ।
इति काठकम् ।
यत् अरोदीत् तत् रुद्रस्य रुद्रत्वम् ।
तस्य एषा भवति ।
रुद्रः रौति इति सतः ।
तं स्वभिष्टौमि समानया गिरा गीत्या स्तुत्या ।
इति हारिद्रविकम् ।
नाभाकस्य प्रशस्तिभिः यः सिन्धूनाम् उपोदये सप्तस्वसा सः मध्यमः नभन्ताम् अन्यके समे ।
नभन्ताम् अन्यके समे ।
अथ एषः एव भवति ।
यः स्यन्दमानानाम् आसाम् उपोदये सप्तससारम् एनम् आह भाग्भिः सः मध्यमः इति निरुच्यते ।
ऋषिः नाभाकः बभूव ।
पितृणां च मननीयैः स्तोमैः ।
मा भूवन् अन्यके सर्वे ये नः द्विषन्ति दुर्धियः पापधियः पापसंकल्पाः ।
नाभाकस्य प्रशस्तिभिः ।
तम् ऊ सु समना गिरा पितृणां च मन्मभिः । । १०.५ ।

तिग्मायुधाय ।
भरत ।
शृणोतु नः ।
तिग्मं तेजतेः ।
उत्साहकर्मणः ।
आयुधम् आयोधनात् ।
सहमानाय्a विधात्रे ।
तस्य एषा अपरा भवति ।
इमाः रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने ।
अषाळहाय अन्यैः ।
अषाळहाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ।
इमाः रुद्राय ।
दृढधन्वने ।
गिरः क्षिप्रेषवे ।
देवाय ।
अन्नवते । । १०.६ ।

सहस्रं ते स्वाप्तवचन भैषज्यानि ।
विक्ष्मापयन्ति चरति इति वा ।
तस्य एषा भवति ।
अग्निः अपि रुद्रः उच्यते ।
तनयं तनोतेः ।
मा नः त्वं पुत्रेषु [ च ] पौत्रेषु च रीरिषः ।
परिवृणक्तु नः सा ।
या ते दिद्युत् अवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः ।
तस्यां चरति ।
क्ष्मया चरति क्ष्मा पृथिवी ।
दिद्युत् द्युतेः वा [ द्योततेः वा ] ।

दिवस्परि दिवः अधि ।
या ते दिद्युत् अवसृष्टा ।
तय चरति ।
तोकं तुद्यतेः ।
सहस्रं ते स्वपिवात भेषजा मा नः तोकेषु तनयेषु रीरिषः । । १०.७ ।

इन्दन् शत्रूणां दारयिता वा ।
इन्दवे द्रवति इति वा ।
इन्दौ रमते इति वा ।
इन्धे भूतानि इति वा ।
तत् यत् एनं प्राणैः समैन्धन् तत् इन्द्रस्य इन्द्रत्वम् ।
इति विज्ञायते ।
तस्य एषा भवति ।
इदं करणात् इति आग्रयणः ।
इन्दतेः वैश्वर्यकर्मणः ।
द्रावयिता वा ।
आदरयिता च यज्वनाम् ।
इरां धारयते इति वा ।
तया बोधयितः इति वा ।
इदं दर्शनात् इति औपमन्यवः ।
स्तोमं रुद्राय दृशीकम् ।
तत् कुरु ।
जराबोध तत् विविढ्ढि विशे विशे यज्ञियाय ।
इरां दारयते इति वा ।
जरा स्तुतिः ।
जरतेः स्तुतिकर्मणः ।
तां बोध ।
तत् विविड्ढि ।
मनुष्यस्य मनुष्यलृय यजनाय ।
स्तोमं रुद्राय दर्शनीयम् ।
इन्द्रः इरां दृणाति इति वा ।
इरां ददाति इति वा ।
इरां दधाति इति वा । । १०.८ ।

अवाहन् एनम् [ दानवम् ] दानकर्माणम् ।
व्यसृजः अस्य धाराः ।
महान्तम् इन्द्र पर्वतं देघं यत् व्यवृणोः ।
विसर्जनकर्मा वा ।
रम्णातिः संयमनकर्मा ।
बाबध्यमानान् अरम्णाः ।
तस्य एषा अपरा भवति ।
एतान् माध्यमिकान् संस्त्यायान् ।
उनत्तेः वा ।
उत्स्यन्दनात् वा ।
उत्सदनात् वा ।

उत्स [उत्सरणात् वा ] ।
अद्रणाः उत्सम् ।
महान्तम् इन्द्र पर्वतं वि यत् वः सृजः वि धाराः अव दानवं हन् ।
अदर्दः उत्सम् असृजः वि खानि त्वम् अर्णवान् बद्बधानान् अरम्णाः ।
त्वम् अर्णवान् अर्णस्वतः ।
व्यसृजः अस्य खानि । । १०.९ ।

सः जनासः इन्द्रः इति । ऋषेः दृष्टार्थस्य प्रीतिः भवति
तस्य एषा भवति ।
आख्यानसंयुक्ता । पर्जन्यः तृपेः । आद्यन्तविपरीतस्य । तर्पयिता
द्यावापृथिव्यौ अपि अबिभीतां नृम्णस्य मह्ना बलस्य महत्त्वेन ।
यः जातः एव प्रथमः मनस्वान् देवः देवान् क्रतुना परि अभूषत् ।
यः जातः एव प्रथमः मनस्वी देवः देवान् । क्रतुना कर्मणा ।पर्यभवत्
यस्य शुष्मात् रोदसी अभ्यसेतां नृम्णस्य मह्ना सः जनासः इन्द्रः ।
जन्यः । परः जेता वा । परः जनयिता वा । प्रार्जयिता वा रसानाम् ।
पर्यगृह्णात् पर्यरक्षत् अत्यक्रामत् इति वा । यस्य बलात् । १०.१० ।

हन्ति दुष्कृतः । विहन्ति वृक्षान् । विहन्ति च रक्षांसि ।
हन्ति दुष्कृतः पापकृतः । बृहस्पतिः बृहतः पाता वा । पालयिता वा ।
सर्वाणि च अमात् भूतानि बिभ्यति महावधात् । महान् हि अस्य वधः ।
महावदात् । उत अनागा ईषते वृष्ण्यावतः यत् पर्जन्यः स्तनयन्
वि वृक्षान् हन्ति उत हन्ति रक्षसः विश्वं बिभाय भुवनम्
तस्य एषा भवति ।
अपि अनपराधः भीतः पलायते वर्षकर्मवतः यत् पर्जन्यः स्तनयन् । १०.११ ।

चमन्ति अस्मिन् इति ।
तस्य एषा भवति ।
पालयिता वा ।
ब्रह्मणस्पतिः ब्रह्मणः पाता वा ।
बृहस्पतिः विरवेण शब्देन विकृत्य ।
निः जःआर तत् चमसम् इव वृक्षात् ।
मत्स्यम् इव दीनः उदके निवसन्तम् ।
अशनवता मेघेन अपिनद्धं मधु परि अपश्यत् ।
निः तत् जभार चमसं न वृक्षात् बृहस्पतिः विरवेणा विकृत्य ।
अश्नापिनद्धं मधु पर्यपश्यन् मत्स्यं न दीनः उदनि क्षियन्तम् ।
चमसः कस्मात् । । १०.१२ ।

अवातितं ब्रह्मणस्पतिः मधुधारम् ।
अभि यम् ओजसा बलेन अभ्यतृणत् तम् एव सर्वे पिबन्ति रश्मयः सूर्यदृशः ।
अशनवन्तम् आस्यन्दनवन्तम् ।
तम् एव विश्वे पपिरे स्वर्दृशः बहु साकं सिसिचुः उत्सम् उद्रिणम् ।
अश्मास्यम् अवतं ब्रह्मणस्पतिः मधुधारम् अभि यम् ओजसा अतृणत् ।
बहु एनं सह सिञ्चन्ति उत्सम् उद्रिणम् उदकवन्तम् । । १०.१३ ।

क्षेत्रस्य पतिः ।
क्षेत्रं क्षियतेः निवासकर्मणः ।

तस्य पाता वा पालयिता वा ।
तस्य एषा भवति । । १०.१४ ।

सः नः मृळआति ईदृशे ।
मृळअतिः दानकर्मा ।
तस्य एषा अपरा भवति ।
बलेन भवति वा धनेन वा ।
क्षेत्रस्य पतिना वयं सुहितेन इव जयामः ।
क्षेत्रस्य पतिना वयं हितेन इव जयामसि ।
गाम् अश्वं पोषयित्न्वा सः नः मृळआति ईदृशे ।
गाम् अश्वं पुष्टं पोषयितृ च आहर इति । । १०.१५ ।

हिरण्यरूपः सः हिरण्यसंदृक् ।
तस्य एषा भवति ।
तस्य पाता वा पालयिता वा ।
वास्तुः वसतेः निवासकर्मणः ।
वास्तोष्पतिः ।
इति यथा ।
मण्डूकाः इव उदकात् मण्डूकाः उदकात् इव ।
क्षेत्रस्य पते मधुमन्तम् ऊर्मिं धेनुः इव पयः अस्मासु धुक्ष्व ।
इति यथा ।
मधुः चुतं घृतम् इव उदकं सुपूतम् ।
यथा कथा च विशेषः अजामि भवति इति अपरम् ।
क्षेत्रस्य पते मधुमन्तम् ऊर्मिं धेनुः इव पयः अस्मासु धुक्व इति ।
यत् एव समाने पादे समानाभिव्याहारं भवति तत् जामि भवति इति अपरम् ।
ऋतस्य नः पातारः वा पालयितारः वा मृळअयन्तु ।
मृळअयतिः उपदयाकर्मा ।
पूजाकर्मा वा ।
तत् यत् समान्याम् ऋचि समानाभिव्याहारं भवति तत् जामि भवति इति एकम् ।
मधुमन्तं मधुः चुतम् इति यथा ।
मधुः चुतं घृतम् इव सुपूतम् ऋतस्य नः पतयः मृळअयन्तु । । १०.१६ ।

शिष्यतेः ।
वाचस्पतिः वाचः पाता वा पालयिता वा ।
इति अपि निगमः भवति ।
रूपं रूपं मघवा बोभवीति ।
यत् यत् रूपं कामयते तत् तत् देवता भवति ।
तस्य एषा भवति ।
शिवम् इति अपि अस्य भवति ।
वकारः नामकरणः ।
शेवः इति सुखनाम ।
अभ्यमनहा वास्तोष्पते सर्वाणि रूपाणि आविशन् सखा नः सुसुखः भव ।
सखा सुशेव एधि नः ।
अमीवहा वास्तोष्पते विश्वा रूपाणि आविशन् ।
अन्तस्थान्तरोपलिङ्गी ।
विभाषितगुणः । । १०.१७ ।

पुनः एहि वाचस्पते देवेन मनसा सह ।
तस्य एषा भवति ।
अपां नपात् तनूनप्त्रा व्याख्यातः ।
वसोष्पते नि रामय मयि एव तन्वं मम ।
इति सा निगदव्याख्याता । । १०.१८ ।

वीर्याय वीरकर्मणे ।
यः अनिध्मः दीदयत् अप्सु अन्तर्यं विप्रास ईळअते अध्वरेषु ।
यमः यच्छति इति सतः ।
तस्य एषा भवति ।
याभिः इन्द्रः वर्धते ।
नपात् मधुमतीः अपः देहि अभिषवाय ।
अपां नपात् मधुमतीः अपः दा याभिः इन्द्रः वावृधे वीर्याय ।
यः अनिध्मः [ दीदयत् ] दीप्यते अभ्यन्तरम् अप्सु यं मेधाविनः स्तुवन्ति यज्ञेषु सः अपां । १०.१९ ।

वैवस्वतम् ।
अग्निः अपि यमः उच्यते ।
तम् एताः ऋचः अनुप्रवदन्ति ।
दुवस्यतिः आप्नोतिकर्मा ।
यमं राजानं हविषा दुवस्य इति ।
संगमनं जनानाम् ।
अवतिः गतिकर्मा ।
प्रवतः उद्वतः निवतः इति ।
पर्यिवांसं पर्यागतवन्तम् ।
परेयिवांसं प्रवतः महीः अनु बहुभ्यः पन्थाम् अनुपस्पशानम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ।
बहुभ्यः पन्थानम् अनुपस्पाशयमानम् । । १०.२० ।

संमिन्वानः द्रवति इति वा ।
तृतीयः अग्निः ते पतिः ।
तं वः ।
पश्वाहुत्या ।
वसत्या च ।
निवसन्त्या ।
औषधाहुत्या ।
अस्तं यथा गावः आप्नुवन्ति तथा आप्नुयाम ।
इद्धं समृद्धं भोगैः ।
तत्प्रधानाः हि यज्ञसंयोगेन भवन्ति ।
त्रायते ।
इति अपि निगमः भवति ।
मेदयतेः वा ।
तस्य एषा भवति ।
सेना इव सृष्टामं दधाति अस्तुः न दिद्युत् त्वेषप्रतीका ।
मित्रः प्रमीतेः ।
सेवा इव सृष्टा भयं वा बलं वा दधाति ।

यमः ह जातः यमः जनित्वं जारः कनीनां पतिः जनीनाम् ।
चराथा चरन्त्या ।
इति द्विपदाः ।
पालयिता जायानाम् ।
अस्तुः इव दिद्युत् त्वेषप्रतीका ।
भयप्रतीका ।
[ बलप्रतीका यशःप्रतीका ] महाप्रतीका दीप्तप्रतीका वा ।
यमः ह जातः इन्द्रेण सह संगतः ।
इति अपि निगमः भवति ।
यमः इव जातः ।
यमः जनिष्यमाणः ।
पतिः जनीनाम् ।
जारः कनीनाम् ।
जरयिता कन्यानाम् ।
यमौ इह इह मातरा ।
तं वः चराथाः वयं वसत्या अस्तं न गावः नक्षन्ते इद्धम् ।
१०.२२
हव्यं घृतवत् जुहोत । मित्रः जनान् आयातयति प्रब्रुवाणः
कः कमनः वा । क्रमणः वा । सुखः वा । तस्य एषा भवति ।
हव्यं घृतवत् जुहोत इति व्याख्यातम् । जुहोतिः दानकर्मा ।
मनुष्यनाम । कर्मवन्तः भवन्ति । विकृष्टदेहाः वा । मित्राय
शब्दं दुर्वन् । मित्रः एव धारयति पृथिवीं च दिवं च ।
उत द्याम् । मित्रः कृष्टीः अनिमिषा अभि चष्टे मित्राय
मित्रः जनान् यातयति ब्रुवाणः मित्रः दाधार पृथिवीम्
मित्रः कृष्टीः अनिमिषन् अभि वि पश्यति इति । कृष्टयः इति । १०.२१ ।

सः धारयति पृथिवीं च दिवं च ।
सरस्वान् व्याख्यातः ।
यदा हि स्त्री गुणान् गृह्णाति गुणाः च अस्याः गृह्यन्ते अथ गर्भः भवति ।
कस्मै देवाय हविषा विधेम इति व्याख्यातम् ।
तस्य एषा भवति ।
सम् अभवत् अग्रे भूतस्य जातः पतिः एकः बभूव ।
गृणातिअर्थे ।
गर्भः गृभेः ।
हिरण्यमयः गर्भः अस्य इति वा ।
हिरण्यगर्भः हिरण्यमयः गर्भः ।
सः दाधार पृथिवीं द्याम् उत इमां कस्मै देवाय हविषा विधेम ।
हिरण्यगर्भः सम् अवर्तत अग्रे भूतस्य जातः पतिः एकः आसीत् ।
गिरति अनर्थान् इति वा ।
विधतिः दानकर्मा । । १०.२३ ।

ये ते सरस्वन् ऊर्मयः मधुमन्तः घृतः चुतः ।
तेभिः नः अविता भव ।
इति सा निगदव्याख्याता । । १०.२४ ।

विश्वकर्मा सर्वस्य कर्ता ।

तस्य एषा भवति । १०.२५ ।

परमः च संदर्शयिता इन्द्रयाणाम् ।
यः इमा विश्वा भुवनानि जुह्वत् ।
तदभिवादिनी एषा ऋक् भवति ।
तत्र इतिहासम् आचक्षते ।
विश्वकर्मा भौवनः सर्वम् एधे सर्वाणि भूतानि जुहवां चकार ।
तस्य उत्तरा भुयसे निर्वचनाय ।
तानि अस्मिन् एकं भवन्ति इति आत्मगतिम् आचष्टे ।
एभ्यः परः आत्मा ।
अन्नेन सह संमोदन्ते यत्र इमानि सपऋषीणानि इन्द्रियाणि ।
एषाम् इष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा ।
इति ।
परमः च संद्रष्टा भूतानाम् ।
सः आत्मानम् अपि अन्ततः जुहवां चकार ।
विश्वकर्मा विमना आद्विहाया धाता विधाता परमा उत संदृक् ।
तेषाम् इष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन् परः एकम् आहुः ।
विधाता च ।
विधाता च ।
तेषाम् इष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा ।
अद्भिः सह संमोदन्ते यत्र एतानि सप्तज्षीणानि ज्योतींषि ।
तेभ्यः परः आदित्यः ।
तानि तेअस्मिन् एकं भवन्ति इति अधिदैवतम् ।
अथ अध्यात्मम् ।
विश्वकर्मा विभूतमना व्याप्ता धाता च ।
विश्वकर्मा विभूतमना व्याप्ता धाता च । । १०.२६ ।

ताक्ष्र्यः त्वष्ट्रा व्याख्यातः ।
तस्य एषा भवति ।
अश्नोतेः वा ।
तीर्णे अन्तरिक्षे क्षियति ।
मुह्यन्तु अन्ये अभितः जनाः सपत्नाः ।
विश्वकर्मन् हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च ।
मुह्यन्तु अन्ये अभितः जनासः इह अस्माकं मघवा सूरिः अस्तु ।
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीम् उत द्याम् ।
इह अस्माकं मघवा सूरिः अस्तु प्रज्ञाता ।
तूर्णम् अर्थं रक्षति । । १०.२७ ।

जूतिः गतिः ।
तस्य एषा अपरा भवति ।
कम् अन्य् मध्यमादेवम् अवक्ष्यत् ।
आशुं स्वस्तये ताक्ष्र्यम् इह ह्वयेम इति ।
सहस्वन्तं तारयितारं रथानाम् अरिष्टनेमिं पृतनाजितम् ।
प्रीतिः वा ।
तं भृशम् अन्नवन्तम् ।
अरिष्टनेमिं पृतनाजम् आशुं स्वस्तये ताक्ष्र्यम् इहा हुवेम ।

त्यम् ऊ सु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
देवजूतं देवगतं देवप्रीतं वा । । १०.२८ ।

मन्युः मन्यतेः ।
तस्य एषा भवति ।
मन्यन्यि अस्मात् इषवः ।
क्रोधकर्मणः [ वधकर्मणः ] वा ।
दीप्तिकर्मणः ।
सहस्रसानिनी शतसानिनी अस्य सा गतिः ।
सद्यः अपि यः शवसा बलेन तनोति अपः सूर्यः इव ज्योतिषा पञ्च मनुष्यजातानि ।
सहस्रसाः शतसा अस्य रंहिः न स्मा वरन्ते युवतिं न शर्याम् ।
सद्यः चित् यः शवसा पञ्च कृष्टीः सूर्यः इव ज्योतिषा अपः ततान ।
न स्म एनां वारयन्ति प्रयुवतीम् इव शरमयीम् इषुम् । । १०.२९ ।

त्वया मन्यो सरथम् आरुह्य रुजन्तः हर्षमाणासः अधृषिता मरुत्वः तिग्मेषवः आयुधानि संशिश्यमानाः अभि प्रयन्तु नरः ।
त्वया मन्यो सरथम् आरुजन्तः हर्षमाणासः अधृषिता मरुत्वः ।
तस्य एषा भवति ।
दधिक्रा व्याख्यातः ।
अग्निरूपाः अग्निकर्माणः ।
तिग्मेषवः आयुधाः संशिशानाः अभि प्र यन्तु नरः अग्निरूपाः ।
सन्नद्धाः कवचिनः इति वा । । १०.३० ।

संपृणक्तु नः मधुना उदकेन वचनानि इमानि इति ।
सहस्रसाः शतसा वाजी अर्वा पृणक्तु मध्वा सम् इमा वचांसि ।
तस्य एषा भवति ।
सविता सर्वस्य प्रसविता ।
मधु धमतेः विपरीतस्य ।
अर्वा ईरणवान् ।
वाजी वेजनवान् ।
आतनोति दधिक्राः [ शवसा ] बलेन अपः सूर्यः इव ज्योतिषा पञ्च मनुष्यजातानि ।
आ दधिक्राः शवसा पञ्च कृष्टीः सूर्यः इव ज्योतिषा अपः ततान ।
सहस्रसाः शतसा । । १०.३१ ।

सविता समुदितारम् इति ।
सविता द्याम् अदृंहत् ।
तदभिवादिनी एषा ऋक् भवति ।
अर्चन् हिरण्यस्तूपः ऋषिः इदं सूक्तं प्र उवाच ।
तथा च हैरण्यस्तूपे स्तुतः ।
आदित्यः अपि सविता उच्यते ।
कम् अन्यं मध्यमादेवम् अवक्ष्यत् ।
बद्धम् अतूर्णे इति वा ।
सविता यन्त्रैः पृथिवीम् अरम्णात् अस्कम्भने सविता द्याम् अदृंहत् ।
अश्वम् इव अधुक्षत् धुनिम् अन्तरिक्षे मेघम् ।
सविता यन्त्रैः पृथिवीम् अरमयत् अनारम्भणे अन्तरिक्षे ।
अश्वम् इव अधुक्षत् धुनिम् अन्तरिक्षम् अतूर्ते बद्धं सविता समुद्रम् ।
बद्धम् अतूर्ते ।

अत्वरमाणः इति वा । । १०.३२ ।

हिरण्यमयः स्तूपः अस्य इति वा ।
तस्य एषा भवति ।
त्वष्टा व्याख्यातः ।
अवनाय वन्दमानः सोमस्य इव अंशुं प्रति जागर्मि अहम् ।
स्तूपः स्त्यायतेः संघातः ।
हिरण्यस्तूपः हिरण्यमयः स्तूपः ।
एवा त्वा अर्चन् अवसे वन्दमानः सोमस्य इव अंशुं प्रति जागर अहम् ।
हिरण्यस्तूपः सवितः यथा त्वा अङ्गिरसः जुहवे वाजे अस्मिन् ।
सवितः यथा त्वा अङ्गिरसः जुहवे वाजे अन्ने अस्मिन् एवं त्वा अर्चन् । । १०.३३ ।

वातः वाति इति सतः ।
अनवत्त्वं वा ।
तस्य एषा भवति ।
असुरत्वम् आदिलुप्तम् ।
अस्ताः च अस्याम् अर्थाः ।
अस्यति अनर्थान् ।
अपि वा असुः प्रज्ञानाम ।
देवः त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।
महत् च अस्मै देवानाम् असुरत्वम् एकम् ।
इमानि च सर्वाणि भूतानि उदकानि अस्य ।
बहुधा च इमा जनयति ।
देवः त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन ।
प्रज्ञावत्त्वं वा ।
इमा च विश्वा भुवनानि अस्य महत् देवानाम् असुरत्वम् एकम् । । १०.३४ ।

तस्य एषा भवति ।
अग्निः व्याख्यातः ।
प्रवर्धयतु च नः आयुः ।
शंभु मयोभु च नः हृदयाय ।
प्र नः आयूंषि तारिषत् ।
वातः आ वातु भेषजं शंभु मयोभु नः हृदे ।
वातः आवातु भैषज्यानि । । १०.३५ ।

कम् अन्यं मध्यमादेवम् अवक्ष्यत् ।
सः अग्ने मरुद्भिः सह आगच्छ इति ।
प्रति त्यं चारुम् अध्वरं गोपीथाय प्र हूयसे ।
मरुद्भिः अग्ने आ गहि ।
तस्य एषा अपरा भवति ।
तं प्रति चारुम् अध्वरं सोमपानाय प्रहूयसे । । १०.३६ ।

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु ।
मरुद्भिः अग्ने आ गहि ।
अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय ।
सोम्यं मधु सोममयम् ।

सः अग्ने मरुद्भिः सह आगच्छ इति । । १०.३७ ।

वेनः वेनतेः कान्ति कर्मणः ।
तस्य एषा भवति । । १०.३८ ।

[ स्तुवन्ति ।
असुनीतिः ।
चिरलब्धः गर्भः भवति ।
शिशीतेः वा स्यात् दानकर्मणः ।
आपः इति वा ।
शुशुः शंसनीयः भवति ।
तस्य एषा भवति ।
पूजयन्ति इति वा ।
] वर्धयन्ति ।
असून् नयति ।
इमम् अपां च संगमने सूर्यस्य च शिशुम् इव विप्रा मतिभिः रिहन्ति ।
जरया यूयते इति वा ।
ज्योतिः जरायुः ज्योतिः अस्य जरायुस्थानीयं भवति ।
पृश्निगर्भाः प्राष्टवर्णगर्भाः ।
अयं वेनः चोदयत् ।
इमम् अपां संगमे सूर्यस्य शिशुं न विप्रा मतिभिः रिहन्ति ।
अयं वेनः चोदयत् पृश्निगर्भाः ज्योतिः जरायुः रजसः विमाने ।
लिहन्ति ।
जरायु जरया गर्भस्य । । १०.३९ ।

चिरं जीवनाय ।
तस्य एषा भवति ।
ऋतः व्याख्यातः ।
घृतेन त्वम् आत्मानं तन्वं वर्धयस्व ।
इति अपि निगमः भवति ।
मा रधाम द्विषते सोम राजन् ।
प्रवर्धय च नः आयुः रन्धय च नः सूर्यस्य संदर्शनाय ।
असुनीते मनः अस्मासु धारय ।
रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ।
असुनीते मनः अस्मासु धारय जीवातवे सु प्र तिरा नः आयुः ।
रध्यतिः वशगमने अपि दृश्यते । । १०.४० ।

ऋतस्य श्लोकः बधिः अस्य अपि कर्णौ आतृणत्ति ।
उनत्तेः वा ।
इन्दुः इन्धेः ।
ज्योतिषः वोदकस्य वा ।
[ आयोः ] अयनस्य मनुष्यस्य ।
तस्य एषा भवति ।
दीप्यमानः च ।
कर्णौ बोधयन् ।
ऋतस्य प्रज्ञा वर्जनीयनि हन्ति ।

ऋतस्य हि शुरुधः सन्ति पूर्वीः ।
ऋतस्य श्लोकः बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ।
ऋतस्य हि शुरुधः सन्ति पूर्वीः ऋतस्य धीतिः वृजिनानि हन्ति ।
बधिरः बद्धश्रोत्रः । । १०.४१ ।

अहः दर्शनीय ।
अहः दर्शनीयः इति ।
तत् परुच्छेपस्य शीलम् ।
परुच्छेपः ऋषिः ।
[ पर्ववच्छेपः ।
] परुषि परुषि शेपः अस्य इति वा ।
सूक्तभाञ्जि हविर्भाञ्जि ।
यथा ।
असुनीतिः ।
इति इमानि सपविंशतिः देवतानाम् अधेयानि अनुक्रान्तानि ।
ऋतः .इन्दुः ।
प्रजापतिः प्रजानां पाता वा पालयिता वा ।
तस्य एषा भवति ।
वेनः ।
कामवान् वा ।
अभ्यासे भूयांसम् अर्थं मन्यन्ते ।
प्र तत् वोचेयं भव्याय इन्दवे हव्यः न यः इषवान् मन्म रेजति रक्षोहा मन्म रेजति ।
स्वयं सः अस्मत् आ निदः वधैः अजेत दुर्मतिम् ।
अव स्रवेत् अघशंसः अवतरम् अव क्षुद्रम् इव स्रवेत् ।
प्र ब्रवीमि तत् भव्याय इन्दवे ।
तेषाम् एतानि अहविर्भाञ्जि ।
यः इषवान् अन्नवान् ।
मनआनि च नः रेजयति ।
रक्षोहा च ।
बलेन रेजयति ।
स्वयं सः अस्मत् अभिनिन्दितारम् ।
बधैः अजेत दुर्मतिम् ।
अवस्रवेत् अघशंसः ।
ततः च अवतरं क्षुद्रम् इव अवस्रवेत् ।
हव्नार्हः इव । । १०.४२ ।

तस्य एषा भवति ।
प्रजापते न हि त्वत् एतानि अन्यः सर्वाणि जातानि तानि परि बभूव ।
अहिः व्याख्यातः ।
इति आशीः ।
वयं स्याम पतयः रयीणाम् ।
यत् कामाः ते जुहुमः तत् नः अस्तु वयं स्याम पतयः रयीणाम् ।
प्रजापते न त्वत् एतानि अन्यः विश्वा जातानि परि ता बभूव ।
यत् कामाः ते जुहुमः ।
तत् नः अस्तु । । १०.४३ ।

बद्धाः अस्मिन् धृताः आपः [ इति वा ] ।
तस्य एषा भवति ।
तन्निवासात् ।
बुध्नम् अन्तरिक्षम् ।
यः अहिः सः बुध्न्यः ।
इदम् अपि इतरत् बुध्नम् एतस्मात् एव ।
बुध्नम् अन्तरिक्षम् ।
अप्सुजम् उक्थैः अहिं गृणिषे बुध्ने नदीनां रजस्सु [ उदकेषु ] सीदन् ।
अब्जाम् उक्थैः अहिं गृणीषे बुध्ने नदीनां रजःसु सीदन् ।
बद्धाः अस्मिन् धृताः प्राणाः इति । । १०.४४ ।

मा नः अहिः बुध्न्यः रिषे धात् मा यज्ञः अस्य स्रिधत् ऋतायोः ।
तस्य एषा भवति ।
सुपर्णः व्याख्यातः ।
मा च नः अहिः बुध्न्यः रेषणाय धात् ।
मा अस्य यज्ञोखा च स्रिधत् ।
यज्ञकामस्य । । १०.४५ ।

आख्यानसंयुक्ता ।
तस्य एषा भवति ।
पुरूरवाः बहुधा रोरूयते ।
सः उ मातरं रेळहि ।
तं माता रेळहि ।
इति ऋषेः दृष्टार्थस्य प्रीतिः भवति ।
तं पाकेन मनसा अपश्यम् अन्तितः ।
सः इमानि सर्वाणि भूतानि अभि वि पश्यति ।
एकः सुपर्णः सः समुद्रम् आ विशति ।
तं पाकेन मनसा अपश्यम् अन्तितः तं माता रेळहि सः उ रेळहि मातरम् ।
एकः सुपर्णः सः समुद्रम् आ विवेश सः इदं विश्वं भुवनं वि चष्टे ।
वाक् एषा माध्यमिका । । १०.४६ ।

महे यत् त्वा पुरूरवः रणाय अवर्धयन् दस्युहत्याय देवाः ।
अपि च एनम् अवर्धयन् ।
रणाय रमणीयाय संग्रामाय अवर्धयन् दस्युहत्याय च देवाः देवाः ।
महते च यत् त्वा पुरूरवः ।
नद्यः [ स्वगूर्ताः ] स्वयंगामिन्यः ।
देवपत्न्यः वा ।
सम् आसत अस्मिन् जायमाने ।
सम् अस्मिन् जायमाने आसत ग्नाः उत ईम् अवर्धन् नद्यः स्वगूर्ताः ।
ग्नाः गमनात् आपः । । १०.४७ ।

श्येनः व्याख्यातः ।
तस्य एषा भवति । । ११.१ ।

मदे सोमस्य मूराः अमूरः [ इति ] ।
आदाय श्येनः अभरत् सोमं सहस्रं सवान् अयुतं च साकम् ।
आश्चर्यम् इव प्राधान्येन ।
तस्य पावमानीषु निदर्शनाय उदाहरिष्यामः ।
बहुलम् अस्य नैघण्टुकं वृत्तम् ।
यत् एनम् अभिषुण्वन्ति ।
ओषधिः सोमः सुनोतेः ।
तस्मात् इन्द्रं मन्यन्ते ।
ऐन्द्रे च सूक्ते सोमपानेन च स्तुतः ।
तत्संबन्धेन अयुतं दक्षिणाः इति वा ।
तत्र अयुतं सोमभक्षाः ।
सहस्रं सहस्रसाव्यम् अभिप्रेत्य ।
अयुतं च सह ।
सहस्रं सवान् ।
अत्रा पुरन्धिः अजहात् अरातीः मदे सोमस्य मूराः अमूरः ।
तत्र पुरन्धिः अजहात् अमित्रान् अदानान् इति वा ।
आदाय श्येनः अहरत् सोमम् । । ११.२ ।

इन्द्राय पातवे सुतः ।
एतस्य वा ।
चन्द्रमसः वा ।
इति सा निगदव्याख्याता ।
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
अथ एषा अपरा भवति । । ११.३ ।

सोमं यं ब्रह्माणः विदुः इति ।
एतस्य वा ।
चन्द्रमसः वा ।
अथ एषा अपरा भवति ।
न तस्य अश्नाति कः चन अदेवः इति ।
सोम्सं यं ब्रह्माणः विदुः चन्द्रमसम् ।
न तस्य अश्नाति कः चन अयज्वा इति अधियज्ञम् ।
सोमं मन्यते पपिवान् यत् संपिंषन्ति ओषधिम् इति यजुःसुतम् असोमम् आह ।
सोमं मन्यते पपिवान् यत् संपिंषन्ति ओषधिम् इति वृथासुतम् असोमम् आह ।
सोमं यं ब्रह्माणः विदुः न तस्य अश्नाति कः चन ।
सोमं मन्यते पपिवान् यत् संपिंषन्ति ओषधिम् ।
अथ अधिदैवतम् । । ११.४ ।

तस्य एषा भवति ।
चान्द्रं मानम् अस्य इति वा ।
चन्द्रः चन्दतेः ।
कान्तिकर्मणः ।
चन्दनम् इति अपि अस्य भवति ।

चारु द्रमति ।
चिरं द्रमति ।
चन्द्रमाः चायन्द्रमति ।
चारु रुचेः विपरीतस्य ।
चन्द्रमा वा ।
चमेः वा पूर्वम् ।
पूर्वपक्षापरपक्षौ इति वा ।
यत् त्वा देव प्र पिबन्ति ततः आ प्यायसे पुनः ।
चन्द्रः माता ।
यत् त्वा देव प्रपिबन्ति ततः आप्यायसे पुनः इति नाराशंसान् अभिप्रेत्य ।
वायुः सोमस्य रक्षिता ।
वायुम् अस्य रक्षितारम् आह ।
साहचर्यात् ।
रसहरणात् वा ।
समानां संवस्त्सराणां मासः आकृतिः सोमः ।
रूपविशेषैः ओषधिः ।
वायुः सोमस्य रक्षिता समानां मासः आकृतिः । । ११.५ ।

भाजं देवेभ्यः वि दधाति आयन् प्र चन्द्रमाः तिरते दीर्घम् आयुः ।
भागं देवेभ्यः विदधाति आयन् ।
तस्य एषा भवति ।
मृतं च्यावयति इति [ वा ] शतबलाक्षः मौद्गल्यः ।
मृत्युः मारयति इति सतः ।
प्रवर्धयते चन्द्रमा दीर्घम् आयुः ।
इति अर्धमासेज्याम् अभिप्रेत्य ।
इति अप्रपक्षान्तम् अभिप्रेत्य ।
अह्नां केतुः उषसाम् एति अग्रम् ।
नवः नवः भवति जायमानः अह्नां केतुः उषसाम् एति अग्रम् ।
नवः नवः भवति जायमानः ।
इति पूर्वपक्षादिम् अभिप्रेत्य ।
आदित्यदैवतः द्वितीयः पादः इति एके । । ११.६ ।

मृतं च्यावयते भवति मृत्यो ।
मदेः वा मुदेः वा ।
कथितं तेन मृत्यो ।
ध्रुवं परेहि मृत्यो ।
परं मृत्यो ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषः मोत वीरान् ।
परं मृत्यो अनु परेहि पन्थां यः ते स्वः इतरः देवयानात् ।
तेषाम् एषा भवति ।
ध्रुवं मृत्यो । । ११.७ ।

इति सा निगदव्याख्याता ।
विश्वानरः व्याख्यातः ।
या मर्त्याय प्रतिधीयमानम् इत् कृशानोः अस्तु रसनाम् उरुष्यथः ।
त्वेषम् इत्था समरणं शिमीवतोः इन्द्राविष्णू सुतपा वाम् उरुष्यति ।

तस्य एषा भवति । । ११.८ ।

प्र वः महे मन्दमानाय अन्धसः अर्चा विश्वानराय विश्वाभुवे ।
महत् च श्रवणीयं यशः ।
तस्य एषा अपरा भवति ।
कम् अन्यं मध्यमादेवम् अवक्ष्यत् ।
द्यावापृथिव्यौ वः परिचरतः इति ।
नृम्णं च बलं नृन्नतम् ।
विश्वानराय सर्वं विभूताय ।
मन्दमानाय मोदमानाय स्तूयमानाय शब्दायमानाय इति वा ।
इन्द्रस्य यस्य प्रीतौ सुमहत् बलम् ।
इन्द्रस्य यस्य सुमखं सहः महि श्रवः नृम्णं च रोदसी सपर्यतः ।
प्रार्चत [ यूयम् ] स्तुतिं महते अन्धसः अन्नस्य दात्रे । । ११.९ ।

उत् उ ज्योतिः अमृतं विश्वजन्यं विश्वानरः सविता देवः अश्रेत् ।
उत् अशिश्रियत् ।
ज्योतिः अमृतम् ।
सर्वजन्यम् ।
विश्वानरः सविता देवः इति ।
धाता सर्वस्य विधाता ।
तस्य एषा भवति । । ११.१० ।

वयं देवस्य धीमहि सुमतिं सत्यधर्मणः ।
तस्य एषः निपातः भवति बहुदेवतायाम् ऋचि ।
विधाता दात्रा व्याख्यातः ।
धाता ददातु दत्तवते प्रवृद्धां जीविकाम् अनुपक्षीणाम् ।
धाता ददातु दाशुषे प्राचीं जीवातु मक्षिताम् ।
वयं देवस्य धीमहि सुमतिं कल्याणीं मतिं सत्यधर्मणः । । ११.११ ।

सोमस्य राज्ञः वरुणस्य धर्मणि बृहस्पतेः अनुमत्याः उ शर्मणि ।
तव अहम् अद्य मघवन् उपस्तुतौ धातः विधातः कलशान् अभक्षयम् ।
इति एताभिः देवताभिः अभिप्रसूतः सोमकलशान् अभक्षयम् इति ।
कलशः [ कस्मात् ] ।
कलाः अस्मिन् शेरते मात्राः ।
कलिः च कलाः च किरतेः ।
विकीर्णमात्राः । । ११.१२ ।

अथ अतः मध्यस्थानाः देवगणाः ।
तेषाम् एषा ग्बवति ।
महत् द्रवन्ति इति वा ।
तेषां मरुतः प्रथमागामिनः भवन्ति ।
मरुतः मितराविणः वा ।
मितरोचिनः वा । । ११.१३ ।

अश्वपर्णैः अश्वपतनैः ।
तेषाम् एषा भवति ।

रुद्राः व्याख्याताः ।
कल्याणप्रज्ञाः वा ।
वर्षिष्ठेन च नः अन्नेन वयः इव आपतत ।
ऋष्टिमद्भिः ।
रथैः आयात ।
स्वर्चिभिः इति वा ।
स्वर्चनैः इति वा ।
स्वः कैः स्वञ्चनैः इति वा ।
विद्युन्मद्भिः मरुतः ।
आ वर्षिष्ठया नः इषा वयः न पप्तता सुमायाः ।
आ विद्युन्मद्भिः मरुतः स्वः कैः रथेभिः यात ऋष्टिमद्भिः अश्वपर्णैः ।
सुमायाः कल्याणकर्माणः वा । । १.१४ ।

तृष्णक् तृष्यतेः ।
आगच्छत रुद्राः इन्द्रेण ।
तेषाम् एषा भवति ।
ऋतेन भवन्ति इति वा ।
ऋतेन भान्ति इति वा ।
ऋभवः उरु भान्ति इति वा ।
उदन्युः उदन्यतेः ।
इयं वः अस्मत् अपि प्रतिकामयते मतिः ।
आ रुद्रासः इन्द्रवन्तः सजोषसः हिरण्यरथाः सुविताय गन्तन ।
सहजोषणाः ।
सुविताय कर्मणे ।
इयं वः अस्मत् प्रति हर्यते मतिः तृष्णजे न दिव उत्सा उदन्यवे ।
तृष्णजः इव दिव उत्सा उदन्यवे । । ११.१५ ।

संवत्सरे सम् अपृच्यन्त [धीतिभिः ] कर्मभिः ।
तेषाम् एषा भवति ।
अङ्गिरसः व्याख्याताः ।
यावत् तत्र भवथ न तावत् इह भवथ इति ।
तस्य यत् अस्वपथः गृहे ।
अगोह्यः आदित्यः अगूहनीयः ।
अगोह्यस्य यत् असस्तना गृहे तत् अद्य इत् अमृभवः न अनु गच्छथ ।
आदित्यरश्मयः अपि ऋभवः उच्यन्ते ।
तत् एतत् ऋभोः च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति ।
ऋभुः विभ्वा वाजः इति सुधन्वनः आङ्गिरसस्य त्रयः पुत्राः बभूवुः ।
सूरप्रज्ञाः वा ।
सौधन्वनाः ऋभवः सूरख्यानाः वा ।
मर्तासः सन्तः अमृतत्वम् आ नशिरे ।
वोळहारः मेधाविनः वा ।
कृत्वा कर्माणि क्षिप्रत्वेन ।
सौधन्वनाः ऋभवः सूरचक्षसः संवत्सरे सम् अपृच्यन्त धीतिभिः ।
विष्ट्वी शमी तरणित्वेन वाघतः मर्तासः सन्तः अमृतत्वम् आ नशुः ।
तेषां प्रथमोत्तमाभ्यां बहुवत् निगमाः भवन्ति न मध्यमेन । । ११.१६ ।

ते अग्नेः अधिजज्ञिरे ।
ते अङ्गिरसः पुत्राः ।
तेषाम् एषा भवति ।
पितरः व्याख्याताः ।
ते गम्भीरकर्माणः वा गम्भीरप्रज्ञाः वा ।
विरूपासः इत् ऋषयः ते इत् गम्भीरवेपसः ।
बहुरूपाः ऋषयः ।
ते अङ्गिरसः सूनवः ते अग्नेः परि जज्ञिरे ।
इति अग्निजन्म । । ११.१७ ।

माध्यमिकः यमः इति आहुः ।
तेषाम् एषा साधारणा भवति ।
तत्प्रतिषेधः ।
थर्वतिः चरतिकर्मा ।
अथर्वाणः अणनवन्तः ।
भृगवः व्याख्याताः ।
पितरः व्याख्याताः ।
तस्मात् माध्यमिकान् पितॄन् मन्यन्ते ।
असुं ये ईयुः अव्काः ऋतज्ञाः ते नः अवन्तु पितरः हवेषु ।
अङ्गिरसः व्याख्याताः ।
उदीरताम् अवरे उत्परासः उन्मध्यमाः पितरः सोम्यासः ।
ते नः आगच्छन्तु पितरः ह्वानेषु ।
उदीरताम् अवरे ।
उदीरतां परे ।
उदीरतां मध्यमाः पितरः ।
सोम्याः सोमसम्पादिनः ते असुं ये प्राणम् अन्वीयुः ।
अवृकाः अनमित्राः ।
सत्यज्ञाः वा यज्ञज्ञाः वा । । ११.१८ ।

तेषां वयं सुमतौ यज्ञियानाम् अपि भद्रे सौमनसे स्याम ।
भद्रे भन्दनीये ।
माध्यमिकः देवगणः इति नैरुक्ताः ।
अथ अपि ऋषयः स्तूयन्ति ।
स्याम इति ।
कल्याणे मनसि ।
भाजनवति वा ।
पितरः इति आख्यानम् ।
सुमतौ कल्याण्यां मतौ ।
तेषां वयम् ।
सोम्याः सोमसम्पादिनः ।
अथर्वाणः भृगवः ।
अङ्गिरसः नः पितरः ।
अङ्गिरसः नः पितरः नवग्वाः अथर्वाणः भृगवः सोम्यासः ।
यज्ञियानाम् अपि च एषाम् ।
नवगतयः नवतीतगतयः वा । । ११.१९ ।

वातस्य इव प्रजवः न अन्येन स्तोमः वसिष्ठाः अन्वेतवे वः ।
तेषाम् एषः निपातः भवति ऐन्द्र्याम् ऋचि ।
इति यथा ।
सूर्यस्य इव वक्षथः ज्योतिः एषां समुद्रस्य इव महिमा गभीरः ।
आप्त्या आप्नोतेः । । ११.२० ।

आदृणाति ।
सप्तदातॄन् इति वा ।
बहूनि ।
प्रतिमानानि ।
सप्त दानवान् इति वा ।
साक्षतिः आप्नोतिकर्मा ।
यः शवसा बलेन ।
आप्तव्यम् ।
ईश्वरतमम् ।
बहुरूपम् उरुभूतम् ।
स्तोतव्यम् ।
आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ।
स्तुषेय्यं पुरुवर्पसम् ऋभ्वमिनतमम् आप्त्यम् आप्त्यानाम् ।
प्रसाक्षते ।
आप्तव्यानाम् । । ११.२१ ।

अथ अतः मध्यस्थानाः स्त्रियः ।
तस्याः एषा भवति ।
तासाम् अदितिः प्रथमागामिनी भवति ।
अदितिः व्याख्याता । । ११.२२ ।

अदितिः दाक्षायणी ।
सप्त अस्मै रश्मयः रसान् अभिसन्नामयन्ति ।
विषमरूपेषु जन्मसु ।
सप्त एनम् ऋषयः स्तुवन्ति इति वा ।
कर्मसु उदयेषु ।
आदित्यः दक्षः ।
इति आहुः ।
इति च ।
तत् कथम् उपपद्यते ।
समानजन्मानौ स्याताम् इति ।
अपि वा देवधर्मेण इतरेतरजन्मानौ स्याताम् ।
इतरेतरप्रकृती ।
तस्य एषा भवति ।
आदित्यमध्ये च स्तुतः ।
अग्निः अपि अदितिः उच्यते ।
मित्रावरुणौ ।
अदितेः दक्षः अजायत दक्षात् उ अदितिः परि ।
अतूर्तपन्थाः पुरुरथः अर्यमा सप्तहोता विषुरूपेषु जन्मसु ।
दक्षस्य वादिते जन्मनि ।

राजानौ ।
परिचरसि ।
विवासतिः परिचर्यायाम् ।
सप्तहोता ।
अर्यमा आदित्यः ।
व्रते कर्मणि ।
अरीन् नियच्छति ।
हविष्मान् आविवासति ।
बहुरथः ।
अतूर्तपन्थाः अत्वरमाणपन्थाः ।
इति आशास्तेः वा ।
दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि । । ११.२३ ।

किल्बन भवति िषं किल्भिदम् ।
कीर्तिम् अस्य भिनत्ति इति वा ।
सरमा सरणात् ।
प्रजावता च राधसा [ धनेन ] ते वयम् इह स्याम इति ।
चोदयसि ।
यं भद्रेण ।
सुकृतकर्मणः भयम् ।
तस्याः एषा भवति ।
यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ।
आगः आङ्पूर्वात् गमेः ।
सर्वासु कर्मततिषु ।
यस्मै त्वं सुद्रविणः ददाशः अनागास्त्वम् अदिते सर्वताता ।
अदिते ।
अनपराधत्वम् ।
अनागास्त्वम् ।
यस्मै त्वं सुद्रविणः ददासि ।
शवसा बलेन ।
एनः एतेः । । ११.२४ ।

तकते इति सतः ।
कथं रसायाः अतरः पयांसि इति ।
रसा नदी रसतेः शब्दकर्मणः ।
कथं ससानि तानि उदकानि इति वा ।
देवशुनि इन्द्रेण प्रहिता पणिभिः असुरैः सम् ऊदे ।
तक्म इति उष्णनाम ।
सरस्वती व्याख्याता ।
पराञ्चनैः अचितः ारं ।
तस्याः एषा भवति ।
इति आख्यानम् ।
परितः एनां तक्म ।
परितक्म्या रात्रिः ।
का ते अस्मासु अर्थहितिः आसीत् ।

जगुहिः जङ्गम्यतेः ।
दूरे हि अध्वा ।
किम् इच्छन्ती सरमा इदं प्र ्मा आनट् ।
का स्मेहितिः का परितक्म्यासीत् कथं रसायाः अतरः पयांसि ।
किम् इच्छन्ती सरमा प्र इदम् आनडू दूरे हि अध्वा जगुरिः पराचैः ।
किं परितकनम् । । ११.२५ ।

यज्ञं वष्टु धियावसुः कर्मवसुः ।
पावका नः सरस्वती वाजेभिः वाजिनीवती ।
तस्याः एषा अपरा भवति ।
अन्नैः अन्नवती ।
यज्ञं वष्टु धियावसुः ।
पावका नः सरस्वती । । ११.२६ ।

वागर्थेषु विधीयते ।
तस्याः एषा भवति ।
तस्मात् माध्यमिकां वाचं मन्यन्ते ।
इमानि च सर्वाणि प्रज्ञानानि अभिविराजति ।
महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वा ।
धियः विश्वा वि राजति ।
महः अर्णः सरस्वती प्र चेतयति केतुना ।
वाक् व्याख्याता । । ११.२७ ।

यद् वाक् वदन्ति ।
तस्याः एषा अपरा भवति ।
यत् आदित्यरश्मयः हरन्ति इति वा ।
यत् पृथिवीं गच्छति इति वा ।
क्व स्वित् अस्याः परमं जगाम इति ।
चतस्रः अनुदिशः ऊर्जं दुदुहे पयांसि ।
अविचेतनानि अविज्ञातानि ।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्वित् अस्याः परअमं जगाम ।
यत् वाक् वदन्ति अविचेतनानि राष्ट्री देवानां नि ससाद मन्द्रा ।
राष्ट्री देवानां नि ससाद [ मन्द्रा ] मदना । । ११.२८ ।

व्यक्तवाचः च अव्यक्तवाचः च ।
अनुमतिः अनुमननात् ।
इति विज्ञायते ।
या उत्तरा सा राका ।
या पूर्वा पौर्णमासी सा अनुमतिः ।
तस्याः एषा भवति ।
पौर्णमास्यौ इति याज्ञिकाः ।
तां सर्वरूपाः पशवः वदन्ति ।
देवीं वाचम् अजनयन्त देवाः ।
सा नः मन्द्रेषम् ऊर्जं दुहाना धेनुः वाक् अस्मान् उप सुष्टुता एतु ।
देवीं वाचम् अजनयन्त देवाः तां विश्वरूपाः पशवः वदन्ति ।
अनुमति राकेति देवपत्न्यौ इति नैरुक्ताः ।

सा नः मदना अन्नं च रसं च दुहाना धेनुः वाक् अस्मान् उप एतु सुष्टुता । । ११.२९ ।

प्रवर्धय च नः आयुः ।
राका रातेः दानकर्मणः ।
अन्नं च नः अपत्याय धेहि ।
त्वं सुखं च नः कुरु ।
अनुमन्यस्व अनुमते ।
क्रत्वे दक्षाय नः हिनु प्र नः आयूंषि तारिषः ।
अनु इत् अनुमते त्वं मन्यासै शं च नः कृधि ।
तस्याः एषा भवति । । ११.३० ।

सिनीवाली कुहूः इति देवपत्न्यौ इति नैरुक्ताः ।
वालिनी वावालेन इव अस्याम् अणुत्वात् चन्द्रमाः सेवितव्यः भवति इति वा ।
सिनाति भूतानि ।
वालं पर्व वृणोतेः ।
तस्याः एषा भवति ।
सिनीवाली सिनम् अन्नं भवति ।
इति विज्ञायते ।
या उत्तरा सा कुहूः ।
या पूर्वा अमावास्या सा सिनीवाली ।
अमावास्ये इति याज्ञिकाः ।
सीव्यतु अपः सूच्या आछिद्यमानया ददातु वीरं शतदायम् उक्थ्यम् ।
उक्थ्यं वक्तव्यप्रशंसम् ।
राकाम् अहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
राकाम् अहं सुह्वानां सुष्टुत्या ह्वये ।
शृणोतु नः सुभगा ।
बोधतु आत्मना ।
सीव्यतु अपः प्रजननकर्म ।
सूच्या आछिद्यमानया ।
सूची सीव्यतेः ।
ददातु वीरम् ।
शतप्रदम् ।
तस्मिन् अन्नवती । । ११.३१ ।

पृथुजघने ।
स्वसा सु असा ।
क्व सती हूयते इति वा ।
क्व अभूत् इति वा ।
कुहूः गूहतेः ।
प्रजां च देवि दिश नः ।
जुषस्व हव्यम् अदनम् ।
स्वेषु सीदति इति वा ।
या त्वं देवानाम् असि स्वसा ।
पृथुष्टुते वा ।
स्तुकः स्त्यायतेः संघातः ।
क्व आहुतं हविः जुहोति इति वा. तस्याः एषा भवति ।

सिनीवालि ।
जुषस्व हव्यम् आहुतं प्रजां देवि दिदिड्ढि नः ।
सिनीवालि पृथुष्टुके या देवानाम् असि स्वसा ।
पृथुकेशस्तुके । । ११.३२ ।

पित्र्यं यशः इति वा ।
तस्याः एषा भवति ।
यमी व्याख्याता ।
तस्यै ते देवि हविषा विधेम इति व्याख्यातम् ।
सा नः ददातु श्रवणं पितॄणाम् ।
कुहूम् अहं सुकृतं विदितकर्माणम् अस्मिन् यज्ञे सुहवानाम् आह्वये ।
कुहूम् अहं सुक्तं विद्मनापसम् अस्मिन् यज्ञे सुहवां जोहवीमि ।
सा नः ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ।
पित्र्यं धनम् इति वा । । ११.३३ ।

सः वा तव ।
इति आख्यानम् ।
तां प्रत्याचचक्षे ।
यमी यमं चकमे ।
अधानेन कुरुष्व संविदम् ।
तस्य वा त्वं मनः इच्छ ।
लिबुजा इव वृक्षम् ।
अन्यः त्वां परिष्वङ्क्ष्यते ।
अन्यम् एव हि त्वं यमि ।
तस्य वा त्वं मनः इच्छा सः वा तव अधा क्णुष्व संविदं सुभद्राम् ।
अन्यम् ऊ सु त्वं यमी अन्यः उ त्वां परि स्वजाते लिबुजा इव वृक्षम् ।
सुभद्रां कल्याणभद्राम् । । ११.३४ ।

उर्वशी व्याख्याता ।
तस्याः एषा भवति । । ११.३५ ।

यदा नूनम् अयं जायेत अद्भ्यः अधि अपः इति ।
पृथिवी व्याख्याता ।
अथ उर्वशी प्रवर्धयते दीर्घमायुः ।
सुजातः सुजाततरः ।
नरापत्यम् इति वा ।
नर्यः मनुष्यः नृभ्यः हितः ।
हरन्ती मे अप्या काम्यानि ।
पतन्ती अद्योतत ।
विद्युत् इव या ।
जनिष्ठः अपः नर्यः सुजातः प्र उवशी तिरत दीर्घम् आयुः ।
विद्युत् न या पतन्ती दविद्योत् भरन्ती मे अप्या काम्यानि ।
उदकानि अन्तरिक्षलोकस्य ।
तस्याः एषा भवति । । ११.३६ ।

इन्द्राणी ।

इन्द्रस्य पत्नी ।
महति इति उदकवति इति वा ।
महत्त्वेन ।
प्रजन्वसि या भूमिम् ।
सत्यं त्वं पर्वतानां मेघानां खेदनं धेदनम् [ भेदनम् ] बलम् अमुत्र धारयसि पृथिवि ।
बळइत्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ।
तस्याः एषा भवति ।
प्रवणवति । । ११.३७ ।

इन्द्राणि इमासु नारिषु सुभगाम् अहम् अशृणवम् ।
तस्याः एषा अपरा भवति ।
न हि अस्याः अपराम् अपि समां जरया म्रियते पतिः ।
विश्वस्मात् इन्द्रः उत्तरः ।
न हि अस्याः अपरं चन जरसा मरते पतिः ।
इन्द्राणि इमासु नारिषु सुभगाम् अहम् अश्रवम् ।
सर्वस्मात् यः इन्द्रः उत्तरः तम् एतत् ब्रूमः । । ११.३८ ।

अद्भिः संस्कृतम् इति वा ।
प्रशस्यः बवति ।
अयम् अपि इतरः गौरः वर्णः एतस्मात् एव ।
सर्वस्मात् यः इन्द्रः उत्तरः तम् एतत् ब्रूमः ।
गौरी रोचतेः ।
तस्याः एषा भवति ।
प्रियं देवेषु निगच्छति ।
यस्य इदम् अप्यं हविः ।
सख्युः वृषाकपेः ऋते ।
न अहम् इन्द्राणि रभे ।
विश्वस्मात् इन्द्रः उत्तरः ।
यस्य इदम् अप्यं हविः प्रियं देवेषु गच्छति ।
न अहम् इन्द्राणि रारण सख्युः वृषाकपेः ऋते ।
ज्वलतिकर्मणः ।
अप्सु शृतम् । । ११.३९ ।

सहस्राक्षरा बहूदका ।
परमे व्यवने ।
नवपदी दिग्भिः च अवान्तरदिग्भिः च आदित्येन च ।
अष्टापदी दिग्भिः च अवान्तरदिग्भिः च ।
चतुष्पदी दिग्भिः ।
एकपदी मध्यमेन ।
तक्षती कुर्वती ।
गौरीः निर्मिमाय सलिलानि ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ।
गौरीः मिमाय सलिलानि तक्षति एकपदी द्विपदी सा चतुष्पदी ।
तस्याः एषा अपरा भवति ।
द्विपदी मध्यमेन च आदित्येन च । । ११.४० ।

तेन जीवन्ति दिगाश्रयाणि भूतानि ।
तस्याः एषा भवति ।
गौः व्याख्याता ।
ततः क्षरति अक्षरम् उदकम् ।
वर्षन्ति मेघाः ।
तस्याः समुद्रा अधिविक्षरन्ति ।
ततः क्षरति अक्षरं तत् विश्वम् उप जीवति ।
तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशः चतस्रः ।
तत् सर्वाणि भूतानि उपजीवन्ति । । ११.४१ ।

प्रप्यायते पयोभिः ।
तस्या एषा भवति ।
धिनोतेः वा ।
धेनुः धयतेः वा ।
घर्मधुक् इति याज्ञिकाः ।
वाक् एषा माध्यमिका ।
मिषन्तम् अनिमिषन्तम् ।
मायुम् इव आदित्यम् इति वा ।
धर्मं हरणम् ।
सृक्वाणं सरणम् ।
आदित्यम् इति वा ।
मूर्धानम् अस्य अभिहिङ्ङकरोत् मननाय ।
गौः अवु अमीमेत् वत्सम् ।
सृक्वाणं घर्मम् अभि वावशाना मिमाति मायुं पयते पयोभिः ।
गौः अमीमेत् अनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोत् मातवा उ ।
अभिवावशाना मिमाति मायुम् । । ११.४२ ।

अभि इद्धः घर्मः ।
तस्याः एषा भवति ।
अघघ्नी इति वा ।
अघ्न्याहन्तव्या भवति ।
घर्मधुक् इति याज्ञिकाः ।
तं सु प्र ब्रवीमि ।
एषः हि श्रेष्ठः सर्वेषां सवानां यत् उदकं यत् वा पयः यजुष्मत् ।
उप ह्वये सुदुघां धेनुम् एतां सुहस्तः गोधुक् उत दोहत् एनाम् ।
श्रष्ठं सवं सविता सुनोतु नः इति ।
कल्याणहस्तः गोधुक् अपि च दोग्धि एनाम् ।
उपह्वये सुदोहनां धेनुम् एताम् ।
श्रेष्ठं सवं सविता साविषन् नः अभि इद्धः घर्मः तत् उ सु प्र वोचम् ।
वाक् एषा माध्यमिका । । ११.४३ ।

सूयवसात् भगवती हि भूया अथा उ वयं भगवन्तः स्याम ।
सर्वदा पिब च शुद्धम् उदकम् आचरन्ती ।
अद्धि तृणम् अघ्न्ये ।
अथ इदानीं वयं भववन्तः स्याम ।

अद्धि तृणम् अघ्न्ये विश्वदानीं पिब शुद्धम् उदकम् आचरन्ती ।
तस्याः एषा अपरा भवति ।
सूयवसादिनी भगवती हि भव । । ११.४४ ।

पन्थाः अन्तरिक्षम् ।
तस्याः एषा भवति ।
तन्निवासात् ।
इति सा निगदव्याख्याता ।
हिङ्कृण्वती वसुपत्नी वसूनां वत्सम् इच्छन्ती मनसा अभि आगात् ।
दुहाम् अश्विभ्यां पयः अघ्न्येयं सा वर्धतां महते सौभगाय ।
पथ्या स्वस्तिः । । ११.४५ ।

सा निर्गमने पातु ।
तस्याः एषा भवति ।
उषा व्याख्याता ।
देवाः एनां गोपायन्तु इति वा ।
स्वावेशा भवतु ।
सा निरमणे ।
वसूनि वननीयानि ।
अभि एति या ।
रेक्णस्वती धनवती ।
स्वस्तिः एव हि प्रपथे श्रेष्ठा ।
सा नः अमा सः अरअणे नि पातु स्वावेशा भवतु देवगोपा ।
स्वस्तिः इत् हि प्रपथे श्रेष्ठा रक्णस्वती अभि या वामम् एति ।
सा नः अमा गृहे ।
देवी गोप्त्री देवान् गोपायतु इति । । ११.४६ ।

आनद्धम् अस्मिन् चीवरम् ।
जीवनकर्मणः ।
उपजीवन्ति एनत् ।
मेघः अपि अनः एतस्मात् एव ।
यत् निरशिश्नथत् ।
वृषा वर्षिता मध्यमः ।
अनः शकटम् ।
तस्याः एषा अपरा भवति ।
अपोषा अनसः सरत् संपिष्टादह बिभ्युषी ।
अनसः इव शकटात् इव ।
अपि वा उपमार्थे स्यात् ।
अनः वायुः अनतेः ।
अनसः संपिष्टात् मेघात् बिभ्युषी ।
अपासरत् उषाः ।
नि यत्सीं शिश्नथत् वृषा ।
अनितेः वा स्यात् । । ११.४७ ।

विपाशि विमुक्तपाशि ।
तस्याः एषा भवति ।

इळआ व्याख्याता ।
परागतात् वा ।
ससार उषाः ।
इतरत् इव ।
एतत् अस्याः अनः आशेते सुसंपिष्टम् ।
ससार सीं परावतः ।
एतत् अस्याः अनः शये सुसंपिष्टिं विपाश्या ।
परावतः प्र ईरितवतः । । ११.४८ ।

गृणाना ।
बृहद्दिवा महद्दिवा ।
तस्याः एषा भवति ।
रुद्रस्य पत्नी ।
रोदसी ।
सेवतां नः अन्नस्य पुष्टेः ।
आयोः अयनस्य [ मनुष्यस्य ] ज्योतिषः वोदकस्य वा ।
अभ्यूर्ण्वाना ।
अभि नः इळआ यूथस्य माता स्मत् नदीभिः उर्वशी वा गृणातु ।
उर्वशी वा गृणातु ।
प्रभृथस्य प्रभृतस्य ।
] स्मत् अभि नदीभिः ।
[ सर्वस्य माता ।
यूथस्य माता ।
अभि गृणातु नः इळआ ।
सिषक्तु नः ऊर्जव्यस्य पुष्टेः ।
उर्वशी वा बृहद्दिवा गृणाना अभि ऊर्ण्वाना प्रभृथस्य आयोः ।
उर्वशी वा । । ११.४९ ।

आ यस्मिन् तस्थौ सुरमणीयानि उदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ।
रथं क्षिप्रं मारुतम् [ मेघम् ] वयं श्रव्णीयम् आह्वयामहे ।
रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।
आ यस्मिन् तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी । । ११.५० ।

